# श्रीहनुमदष्टोत्तरशतनामस्तोत्रम्

॥ श्रीगणेशाय नमः ॥

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

श्रीपराशर उवाच -

शृणु मैत्रेय! मन्त्रज्ञ अष्टोत्तरशतसंज्ञिकः ।

नाम्नां हनूमतश्चैव स्तोत्राणां शोकनाशनम् ॥

पूर्वं शिवेन पार्वत्याः कथितं पापनाशनम् ।

गोप्याद्गोपतरं चैव सर्वेप्सितफलप्रदम् ॥

विनियोगः -

ॐ अस्य श्रीहनुमदष्टोत्तरशतनामस्तोत्रमन्त्रस्य सदाशिव ऋषिः ।

अनुष्टुप् छन्दः । श्रीहनुमान् देवता । ह्रां बीजम् ।

ह्रीं शक्तिः । ह्रूं कीलकम् ।

श्रीहनुमद्देवता प्रसादसिद्ध्यर्थे जपे विनियोगः ।

ध्यानम् -

ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहम्

देवेन्द्रप्रमुखैः प्रशस्तयशसं देदीप्यमानं ऋचा ।

सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं

संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतम् ॥

॥ इति ध्यानम् ॥

हनुमान् स्थिरकीर्तिश्च तृणीकृतजगत्त्रयः ।

सुरपूज्यस्सुरश्रेष्ठो सर्वाधीशस्सुखप्रदः ॥

ज्ञानप्रदो ज्ञानगम्यो विज्ञानी विश्ववन्दितः ।

वज्रदेहो रुद्रमूर्ती दग्धलङ्का वरप्रदः ॥

इन्द्रजिद्वयकर्ता च रावणस्य भयङ्करः ।

कुम्भकर्णस्य भयदो रमादासः कपीश्वरः ॥

लक्ष्मणानन्दकरो देवः कपिसैन्यस्य रक्षकः ।

सुग्रीवसचिवो मन्त्री पर्वतोत्पाटनो प्रभुः ॥

आजन्मब्रह्मचारी च गम्भीरध्वनिभीतिदः ।

सर्वेशो ज्वरहारी च ग्रहकूटविनाशकः ॥

ढाकिनीध्वंसकस्सर्वभूतप्रेतविदारणः ।

विषहर्ता च विभवो नित्यस्सर्वजगत्प्रभुः ॥

भगवान् कुण्डली दण्डी स्वर्णयज्ञोपवीतधृत् ।

अग्निगर्भः स्वर्णकान्तिः द्विभुजस्तु कृताञ्जलिः ॥

ब्रह्मास्त्रवारणश्शान्तो - ब्रह्मण्यो ब्रह्मरूपधृत् ।

शत्रुहन्ता कार्यदक्षो ललाटाक्षोऽपरेश्वरः ॥

लङ्कोद्दीपो महाकायः रणशूरोऽमितप्रभः ।

वायुवेगी मनोवेगी गरुडस्य समोजसे ॥

महात्मा विष्णुभक्तश्च भक्ताभीष्टफलप्रदः ।

सञ्जीविनीसमाहर्ता सच्चिदानन्दविग्रहः ॥

त्रिमूर्ती पुण्डरीकाक्षो विश्वजिद्विश्वभावनः ।

विश्वहर्ता विश्वकर्ता भवदुःखैकभेषजः ॥

वह्नितेजो महाशान्तो चन्द्रस्य सदृशो भवः ।
सेतुकर्ता कार्यदक्षो भक्तपोषणतत्परः ॥

महायोगी महाधैर्यो महाबलपराक्रमः ।
अक्षहन्ता राक्षसघ्नो धूम्राक्षवधकृन्मुने ॥

ग्रस्तसूर्यो शास्त्रवेत्ता वायुपुत्रः प्रतापवान् ।
तपस्वी धर्मनिरतो कालनेमिवधोद्यमः ॥

छायाहर्ता दिव्यदेहो पावनः पुण्यकृत्शिवः ।
लङ्काभयप्रदो धीरो मुक्ताहारविभूषितः ॥

मुक्तिदो भुक्तिदश्चैव शक्तिद शङ्करस्तथा ।
हरिर्निरञ्जनो नित्यो सर्वपुण्यफलप्रदः ॥

इतीदं श्रीहरेः पुण्यनामाष्टोत्तरशतम् ।
पठनाच्श्रवणान्मर्त्यः जीवन्मुक्तो भवेद्ध्रुवम् ॥

॥ इति श्रीपराशरसंहितायान्तर्गते श्रीपराशरमैत्रेयसंवादे
हनुमदष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥



 